# श्रीनील सरस्वतीस्तोत्रम्

श्री गणेशाय नमः ॥

घोररूपे महारावे सर्वशत्रुवशङ्करी । var क्षयङ्करी
भक्तेभ्यो वरदे देवि त्राहि मां शरणागतम् ॥ १॥

सुराऽसुरार्चिते देवि सिद्धगन्धर्वसेविते ।
जाड्यपापहरे देवि त्राहि मां शरणागतम् ॥ २॥

जटाजूटसमायुक्ते लोलजिह्वानुकारिणी ।
द्रुतबुद्धिकरे देवि त्राहि मां शरणागतम् ॥ ३॥

सौम्यरूपे घोररूपे चण्डरूपे नमोऽस्तु ते । var क्रोधरूपे
दृष्टिरूपे नमस्तुभ्यं त्राहि मां शरणागतम् ॥ ४॥ var सृष्टिरूपे
जडानां जडतां हन्सि भक्तानां भक्तवत्सले । var जडतां भजतां
मूढतां हर मे देवि त्राहि मां शरणागतम् ॥ ५॥

ह्रूं ह्रूंकारमये देवि बलिहोमप्रिये नमः ।
उग्रतारे नमस्तुभ्यं त्राहि मां शरणागतम् ॥ ६॥

बुद्धिं देहि यशो देहि कवित्वं देहि देहि मे ।
कुबुद्धिं हर मे देवि त्राहि मां शरणागतम् ॥ ७॥ मूढत्वं
इन्द्रादिदेव सद्वृन्दवन्दिते करुणामयी । var इन्द्रादिदिविषद् वृन्द
तारे ताराधिनाथास्ये त्राहि मां शरणागतम् ॥ ८॥

॥ अथ फलश्रुतिः ॥

अष्टम्यां च चतुर्दश्यां नवम्यां यः पठेन्नरः । चैकचेतसः
षण्मासैः सिद्धिमाप्नोति नाऽत्र कार्या विचारणा ॥ १॥

मोक्षार्थी लभते मोक्षं धनार्थी धनमाप्नुयात् ।
विद्यार्थी लभते विद्यां तर्कव्याकरणादिकाम् ॥ २॥

इदं स्तोत्रं पठेद्यस्तु सततं श्रद्धयान्वितः । सधनं लभते नरः ।
तस्य शत्रुः क्षयं याति महाप्रज्ञा च जायते ॥ ३॥

पीडायां वापि सङ्ग्रामे जप्ये दाने तथा भये ।

य इदं पठति स्तोत्रं शुभं तस्य न संशयः ॥ ४॥

स्तोत्रेणानेन देवेशि स्तुत्वा देवीं सुरेश्वरीम् ।
सर्वकाममवाप्नोति सर्वविद्यानिधिर्भवेत् ॥ ५॥ सर्वान् कामानवाप्नोति
इति ते कथितं दिव्यं स्तोत्रं सारस्वतप्रदम् ।
अस्मात्परतरं नास्ति स्तोत्रं तन्त्रे महेश्वरी ॥ ६॥

॥ इति बृहन्निलतन्त्रे द्वितीयपटले तारिणीनीलसरस्वतीस्तोत्रं समाप्तम् ॥